श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीव्यासमहर्षि विरचितं

# ॥ श्रीरामभुजङ्गाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

श्रीमते रामानुजाय नमः

# ॥ श्रीरामभुजङ्गाष्टकम् ॥

भजे विशेषसुन्दरं समस्तपाप खण्डनम्।
स्वभक्त चित्तरञ्जनं स दैवराममद्वयम्॥ १ ॥

जटाकलापशोभितं समस्तपापनाशकम्।
स्वभक्तभीतिभञ्जनं भजेहराममद्वयम्॥ २ ॥

निजस्वरूपबोधकं कृपाकरं भवापहम्।
समं शिवं निरञ्जनं भजेहराममद्वयम्॥ ३ ॥

सप्रपञ्चकल्पितं ह्यनामरूपवास्तवम्।
निराकृतिं निरामयं भजेहराममद्वयम्॥ ४ ॥

निष्प्रपञ्च निर्विकल्प निर्मलं निरामयम्।
चिदेकरूपसन्ततं भजेहराममद्वयम्॥ ५ ॥

भवाब्धिपोतरूपकं ह्यशेषदेहकल्पितम्।
गुणाकरं कृपाकरं भजेहराममद्वयम्॥ ६ ॥

महावाक्य बोधकैर्विराजमानवाक्पदैः।
परंब्रह्मव्यापकं भजेहराममद्वयम्॥ ७ ॥

शिवप्रदं सुखप्रदं भवच्छिदं भ्रमापहम्।
विराजमानदेशिकं भजेहराममद्वयम्॥ ८ ॥

रामाष्टकं पठति यस्सुकरं सुपुण्यं
व्यासेनभाषितमिदं शृणुते मनुष्यः।
विद्यां श्रियं विपुलसौख्यमनन्तकीर्तिं
संप्राप्य देहविलये लभते च मोक्षम्॥ ९ ॥

॥ इति श्रीरामभुजङ्गाष्टकम् समाप्तम् ॥